।। शिवाभ्यां नमः ।।

# ।। गङ्गाष्टकम् ।।

शम्भो भवन्नाम निरन्तरानुसन्धान भाग्येन भवन्तमेव।
यद्येष सर्वत्र तथान्त्यजेऽद्य पश्यत्यहो कोऽत्र कृतोऽपराधः।। १

अस्त्वेष मन्तुः पितृयज्ञनिष्ठे गङ्गाप्लवो यो विहितोऽपचित्यै।
दूरात्तु तन्नामजपेन शुद्धिः न स्यात् कथं मे स्मृतिरर्थवादः।। २

त्वन्नामनिष्ठा न हि तावती मे श्रद्धा यतः कर्मसु न प्रदग्धा।
त्रैशङ्कवं मे पशुपान्तरायः मुच्येय तस्मात्कथं आर्तबन्धो।। ३

यद्यद्य ते श्राद्धविनष्टिरिष्टा कोऽहं ततोऽन्यच्चरितुं समर्थः।
श्राद्धे वृताः पूर्वदिनोपवासाः नान्यत्र भुञ्जीयुः इदं तु खिद्ये।। ४

श्रद्धालवः श्राद्धविघातभीत्या स्वात्मोपरोधं विगणय्य धीराः।
यत्प्रोचुरत्रापचितिं महान्तः तत्रोचितं यद्दयया विधेहि।। ५

गङ्गाधर त्वद्भजनान्तराय भीत्या गृहे कूपकृतावगाहः।
जाने न तीर्थान्तरं अद्य गङ्गां आसादयेयं कथमार्तबन्धो।। ६

नाहं तपस्वी सगरान्ववायः जाने न जह्नुः चरति क्वेति।
शम्भो जटाजूटमपावृणुष्वेत्यभ्यर्थने नालमयं वराकः।। ७

गङ्गाधराख्या गतिरत्र नान्या तामाश्रये सङ्कटमोचनाय।
हन्त प्रवाहः कथमत्र कूपे विस्फूर्जतीशः खलु मे प्रसन्नः।। ८

गङ्गेति गङ्गेति हरेति गृह्णन् आप्लावितोऽहं दयया पुरारेः।
कूपोत्थितोऽयं करुणाप्रवाहः गाङ्गश्चिरायात्र जनान् पुनातु।। ९

।। इति श्री श्रीधरवेङ्कटेशार्य कृत गङ्गाष्टकं सम्पूर्णम् ।।